करं सर्पफणाकारं कृत्वां तं चूर्ध्वं मुद्रितम्।
आनम्रमूर्धमचलं प्रजपेत् प्राङ्मुखो द्विजः।
अनामिकामध्यदेशादधः वामक्रमेण च।
तर्जनीमूलपर्यन्तं जपस्यैव क्रमः करे॥

ॐ

भवाय देवाय क्षितिमूर्तये। शर्वाय देवाय जलमूर्तये।
रुद्राय देवाय पवनमूर्तये। पशुपतये देवायाग्निमूर्तये।
उग्राय देवाय सोममूर्तये। भीमाय देवाय यजमानमूर्ति०
महादेवाय सूर्यमूर्तये। ईशानाय देवाय आकाश०
ॐ ह्रों ह्रीं जं सः नमः शिवाय प्रपन्नपारिजाताय
पार्थिवेश्वराय ॥1. अजैकपादये।2. अहिर्बुध्न्याय।
3. कपालिने।4. पिनाकपाणये।5. वृषाकपये।
6. सिन्धवे।7. कपर्दिने।8. बहुरूपाय।9. रुद्राय।
10. हराय।11. त्र्यम्बकाय॥

---

ज्वालाकेशं त्रिनेत्रं भुजगपतिमहा
भीषणं मुण्डमालां देवीं कर्त्रीं कपालं
डमरमथ महाघोर शूलं दधानम्
वीणां वाद्यप्रवीणा मुरसि विनिहितां
वादयन्तं भुजाभ्यां वन्दे वेतालमुग्र-
दिनकर सदृशं नाट्य लग्नं हसन्तम्॥

पिङ्गकेशमुदिताभ्र सन्निभं सृक्किणं भुजगभीषणाननम्
मुण्डमालमभयं चतुर्भुजं तं स्मरामि हृदये शवासनम्